विध्वस्तपरगुणानां
 भवति खलानामतीव मलिनत्वम् ।
अन्तरितशशिरुचामपि
 सलिलमुचां मलिनिमाभ्यधिकः ॥ ९ ॥
सा रसवत्ता विहता
 नवका विलसन्ति चरति नो कङ्कः ।

---

**विध्वस्तेति**। विध्वस्ताः निह्नुताः परेषां गुणाः येषां तादृशानाम्। खलानां दुर्जनानाम् । मलिनत्वं मलिनिमा । अतीव भवति । स्वयमेव मलिनानां दुर्जनानां परगुणनिह्नवः न केवलं न गुणाय, प्रत्युत मालिन्याभिवृद्धये एवेत्यर्थः । अन्तरिता आच्छादिता शशि-रुक् चन्द्रकान्तिः यैस्तेषां तथोक्तानाम् । सलिलमुचां तोयदानामपि । मलिनिमा मालिन्यं नीलिमा च । अभ्यधिकः । ये सलिलवर्षेण उपकुर्वन्ति तेषामपि चन्द्रप्रकाशप्रच्छादने नितरां मालिन्यं किमुत अपकारैकनिरतानां परगुणापह्नवव्यसनिनां दुर्जनानामिति तात्पर्यम् । एतदर्थमेव अपिकारः सलिलमुक्पदप्रयोगश्च । दुर्जनानां परगुणापह्नवव्यसनमपि प्रकारान्तरं मालिन्यसंपत्तेरिति भावः । शिवरामस्तु "अव्ययानामनेकार्थत्वात् प्रकृते अपिकारस्य हेतुपरत्वम् । अपि यतः कारणात्" इति व्याचष्टे ॥ ९ ॥

**सारसवत्तेति**। विक्रमादित्ये तन्नाम्नि राज्ञि । सरसि पद्माकरे

**सरसीव कीर्तिशेषं**

**गतवति भुवि विक्रमादित्ये ॥ १० ॥**

इव । कीर्तिशेषं यशश्शेषम् । गतवति लोकान्तरं गते सतीत्यर्थः । भुवि पृथिव्याम् । सा प्रसिद्धा । रसवत्ता रसिकता गुणवत्ता वा । विहता नष्टा । यद्वा रसवत्ता प्रबन्धानां रसपुष्टिः । विहता । विक्रमादित्येन परिपोषितैः निर्भरैः कविभिः कृतानां प्रबन्धानां रसमयत्वात्, तदनन्तरं तादृशस्य राज्ञोऽभावेन तथाविधानां रसप्रचुराणां प्रबन्धानामनवतारादिति भावः । अज्ञाताः कुत्सिता वा नवाः नवकाः । अज्ञाते कुत्सिते वा कः । नूतनाः किंराजानः कुकवयो वेत्यर्थः । विलसन्ति स्फुरन्ति । यद्वा रलयोरभेदः । विरसन्ति विरुद्धं विविधं वा शब्दायन्ते । राजपक्षे, केवलं इदानीन्तना राजानो वाचा परं विकत्थन्ते, नतु विक्रमार्क इव "क्रिया केवलमुत्तरम्" इति न्यायमनुवर्तितुं प्रभवन्तीत्यर्थः । कविपक्षे च, पूर्वकविवत् न रसमयं काव्यं संग्रथितुमेते कुकवयः पारयन्ति, अपि तर्हि निरर्थकशब्दाडम्बरकोलाहलेनैव कृतार्थभावमनुभवन्तीत्यर्थ इति बोध्यम् । तथाच शिवलीलार्णवे श्रीनीलकण्ठदीक्षितः । "कृते युगे व्यञ्जनयावतीर्णं त्रेतायुगे सैव गुणीबभूव । आसीत्तृतीये तु युगेऽर्थचित्रं युगे तुरीये यमकप्रपञ्चः ॥" इति । रस शब्दे, भौवादिकः । यद्वा नवकाः अज्ञाताः कुत्सिता वा नव । नवन् शब्दात् कः । विलसन्ति । पूर्वं हि सुप्रसिद्धा विक्रमार्कसभास्तारा नव पण्डिता आसन्, येषामेव च नवरत्नानीति व्यपदेशः । साम्प्रतं तु आत्मनोऽपि तान्मन्यमाना हन्त

अन्य एव नव कुपण्डिता वल्गन्तीत्यर्थः । नव तानि रत्नानि च ज्योतिर्विदाभरणे परिगणितानि। "धन्वन्तरिक्षपणकामरसिंह शङ्कुवेतालभट्टघटकर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेस्सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥ " इति । कं । कः । नो चरति न भक्षयति। अराजन्वत्त्वाज्जगतो मात्स्यन्यायरीत्या दुर्बलं प्रबलः पीडयतीत्यर्थः । कः कं नो चरति नानुगच्छति । पण्डितोऽपि पोषकाभावेन क्षीणस्सन् पामरमप्यनुसरतीत्यर्थो वा। चर गतिभक्षणयोः । शिवरामस्तु "को जनः कं व्यवहारं न करोति । यद्वा कः तादृक्पाण्डितंमन्यः कं मूर्धानं नो चरति न गच्छति नारोहति। अपि त्वारोहत्येव " इति व्याचष्टे । यद्वा सारसवत्ता इत्येकं पदम्। न बका इति छेदः । वबयोरभेदः। न बका विलसन्तीति, चरति नो कङ्क इति च वाक्ये काकुरनुसन्धेया । तथा चायमर्थः । सारसवत्ता हंसतुल्यता। यथा हि हंसाः नीरक्षीरयोः क्षीरमेव गृह्णन्ति, तथा केवलं गुणमात्रग्रहणकुतुकितेत्यर्थः । विहता । सर्वेऽपि साम्प्रतं दोषैकगवेषणपरायणा इति भावः । सारसशब्दात् तेन तुल्यमिति वतौ ततो भावे तल् । "चक्राङ्गः सारसो हंसः" इति शब्दार्णवः । यद्वा सारविषये सवत्ता अभ्यनुज्ञातृत्वं ऐश्वर्यं वा । विहता नष्टा । सवत्ता इति, षु प्रसवैश्वर्ययोरित्यस्मात् भौवादिकात् शतृप्रत्यये ततो भावे तलि निष्पन्नम् । तत्र प्रसवोऽभ्यनुज्ञानमिति वैयाकरणाः । "सारो बले स्थिरांशे च मज्ञि पुंसि जले धने । न्याय्ये क्लीबं त्रिषु वरे" इति मेदिनी । बकाः बकवृत्तयः कपटकर्माणः न विलसन्ति । काका विलसन्त्येवेत्यर्थः । विवेकिनो नृपतेरभावात् व्याजप्रवृत्तानामेव सम्प्रति विलासोदय इति भावः । अथवा बकाः

कुबेराः धनिन इति यावत् । न विलसन्ति । अत्र काकुर्नापेक्षिता । यागादीनां यथावदभावेन वर्षादिविरहाद्दुर्भिक्षाक्रान्तास्सर्व एव दरिद्रति, न तु कश्चिदपि लक्ष्मीवानस्तीति भावः । "बकस्तु बकपुष्पे स्यात्कह्वे श्रीदे च रक्षसि ।" इति मेदिनी । कङ्कः यमः । नो चरति । काका भक्षयत्येवेत्यर्थः । यद्वा कः यमः । कं । न चरति न भक्षयति सर्वमपि भक्षयत्येवेत्यर्थः । धर्मव्यवस्थायाश्शीर्णत्वात् प्रजानामकालएव मरणमुपजायत इति भावः । यद्वा कङ्कः चिह्नमात्रेण ब्राह्मणः ब्राह्मणब्रुवः । नो चरति किम् । वर्णाश्रमरक्षकस्य नृपतेरभावात् द्विजातयो न कर्मणा किन्तु यज्ञोपवीतादिचिह्नमात्रेणैव ब्राह्मण्यं वहन्तीत्यर्थः । वर्णाश्रमव्यवस्था हन्त सर्वापि व्याकुलेति भावः । "कङ्को ब्राह्मणलिङ्गिनि । लोहपृष्ठे यमे" इत्यनेकार्थसंग्रहः । "को ब्रह्मात्मानिलार्काग्निचित्तधीयमकेकिषु ।" इति नानार्थरत्नमाला । सरःपक्षे च इत्थम् । कीर्तिशेषं स्थलमात्रशेषम् । "कीर्तिः स्त्री यशसि स्थले" इति भागुरिः । यद्वा कीर्तिः पङ्कः । "कीर्तिः प्रसादयशसोर्विस्तारे कर्दमेऽपि च ।" इति हैमः । सा भूतपूर्वा । रसवत्ता जलवत्त्वम् । विहता । यद्वा सारसवत्ता सारसाख्यपक्षिविशेषसहितत्वम् । "सारसः पक्षिभेदेन्द्वोः क्लीबन्तु सरसीरुहे ।" इति मेदिनी । बकाः तदाख्याः पक्षिविशेषाः । न विलसन्ति । कङ्कः तदाख्यः पक्षिविशेषः । नो चरति । इदमुपलक्षणम् । जलाभावेन न पक्षिणस्संचरन्तीति तात्पर्यम् । अथवा सारसवत्ता कमलयुक्तत्वम् । विहता । बकाः न विलसन्ति किं इति काकुरनुसन्धेया । केवलं मीनग्रहणाय बका एव तत्र पङ्कशेषे

अविदितगुणापि सत्कवि-
भणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि हि
हरति दृशं मालतीमाला ॥ ११ ॥

---

सरसि वल्गन्तीत्यर्थः । कङ्कः तरङ्गः । नो चरति नोद्गच्छति । "कङ्कौ तु लहरीगृध्रौ" इत्युत्पलः । अन्ये तु विक्रमसहितः आदित्यः विक्रमादित्यः तेजस्वी सूर्य इत्यर्थः । विक्रमादित्य इव विक्रमादित्य इति, विक्रमादित्यः आदित्य इवेति वा उपमा । सरसीवेत्यनुरोधात् । सरसीत्येतच्च भुवीत्यस्योपमानम् । विक्रमादित्य एव विक्रमादित्य इति श्लिष्टं रूपकं वास्तु । अलङ्कारयोरेवं संभेदेन प्रयोगस्तु, सा केतुमालोपवना बृहद्भिरित्यादौ बहुशो दृष्ट एवेति न काचिदनुपपत्तिः । एतत्पक्षे च सारसवत्ता इत्यत्र प्रशंसायां मतुप् । विकासेन च प्राशस्त्यम् । तथा च सारसवत्तेत्यस्य विकसितकमलयुक्तत्वमित्यर्थः । बका न विलसन्तीत्यादिकं च रात्रौ सरसि पक्षिमात्रसंचारभावतात्पर्यकम् । तत्र बका इत्येतत् जलपक्षिणां, कङ्क इत्येतत् तदन्येषां चोपलक्षणमिति व्याचक्षते । **उपमा** ॥ १० ॥

**अविदितेति** । सत्कवीनां महाकवीनां भणितिः सूक्तिः । "भणितिश्शब्दसौष्ठवे" इति तु भागुरिः । अविदिताः अपर्यालोचिताः गुणाः प्रसादमाधुर्यादयः यस्यास्सा तथोक्ता श्रुतमात्रा सत्यपीत्यर्थः । कर्णेषु । मधुधाराम् । वमति उद्गिरति वर्षतीत्यर्थः ।

**गुणिनामपि निजरूप-**
**प्रतिपत्तिः परत एव संभवति ।**
**स्वमहिमदर्शनमक्ष्णो-**
**र्मुकुरतले जायते यस्मात् ॥ १२ ॥**

---

एतदेव हि महाकविसूक्तीनां सौभाग्यसर्वस्वम् , यदनपेक्षितान्यविमर्शमापातमात्रेणापि सङ्गीतकवत्सङ्कलनं नाम कर्णानन्दस्येति भावः । तथा चाहुः । "अपर्यालोचितेऽप्यर्थे बन्धसौन्दर्यसंपदा । गीतवद्धृदयाह्लादं तद्विदां विदधाति यत् ॥ तत्काव्यम्" इति । मालतीमाला । अनधिगतः अनाघ्रातः परिमलः सौरभ्यं यस्याः तादृशी सत्यपि । दृशं दृष्टिम् । हरति । यथा मालतीमालाया आपातमात्रेणैव प्रथमतो दृष्टिहरत्वं तदीयपरिमलगुणानुभवे च महान्मनसः प्रमोदातिरेकः, तद्वदेव सुकविसूक्तेरपीति भावः । **दृष्टान्तालङ्कारः** ॥ ११ ॥

**गुणिनामपीति** । गुणिनां गुणवतां सज्जनानामपि । निजरूपप्रतिपत्तिः स्वस्वरूपज्ञानं स्वकीयपाण्डित्यादिनिश्चय इत्यर्थः । परतः अन्येभ्य एव । संभवति । तत्र निदर्शनं दर्शयति—स्वमहिमेति । यस्मात् । अक्ष्णोः चक्षुषोः स्वयं सर्वं पश्यतोरित्यर्थः । स्वमहिम्नः स्वमहत्त्वस्य दर्शनम् । मुकुरतले आदर्शे । जायते । यथा हि सर्वदर्शनक्षमयोरपि नेत्रयोः निजस्वरूपपरिज्ञाने स्वयमपारयतोरन्यापेक्षा, तथैव गुणवतां स्वयमन्यविवेचकानामपि स्वकीयगुणपाण्डित्यादिनिश्चयः परेष्वेवायतत इति भावः ॥ १२ ॥

अभूदभूतपूर्वः, सर्वोर्वीपतिचक्रचारुचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणिः, नृसिंह इव दर्शितहिरण्यकशिपुक्षेत्रदानविस्मयः, कृष्ण इव कृतवसुदेवतर्पणः, नारा-

---

इतः कथामारभते— **अभूदित्यादिना** । चिन्तामणिर्नाम राजा अभूदिति संबन्धः । चिन्तामणेर्विशेषणानि अभूतपूर्व इत्यादीनि । पूर्वं भूतः भूतपूर्वः स न भवतीत्यभूतपूर्वः । पूर्वमेतादृशो न कोऽपि राजासीदित्यर्थः । सर्वेषां उर्वीपतीनां राज्ञां चक्रं समूहः तस्य चारूणां चूडामणीनां या श्रेणी पङ्क्तिः सैव शाणः निकषः तस्य कोणे कोटौ कषणेन घर्षणेन निर्मलीकृताः चरणनखा एव मणयो यस्य स तथोक्तः । सर्वैरपि भूपतिभिर्वन्दितचरण इत्यर्थः । मणयो हि नैर्मल्याय निकषे घृष्यन्त इति स्थितिः । 'मणय इव नखा इत्युपमितसमासः' इति शिवरामस्तु शाणकोणकषणमण्यादिपदप्रयोगस्वारस्येन उत्तरपदार्थप्राधान्यं विवक्षमाणस्य कवेरननुकूलः, श्रेण्येव शाण इति स्वोक्तिव्याहतश्च । उपमितसमासे हि पूर्वपदार्थप्राधान्यम् । न चैतत् कषणपदस्वारस्यं सहते । एवमेव ह्युपमारूपकयोरालङ्कारिकैर्विवेचितो विषयविभाग इत्यलम् । **नृसिंह इवेति** । दर्शितः हिरण्यस्य स्वर्णस्य कशिपोः अन्नाच्छादनयोः क्षेत्रस्य केदारस्य च दानेन वितरणेन विस्मयः आश्चर्यं येन तादृशः । स्वर्णभोजनादिप्रद इत्यर्थः । पक्षे हिरण्यकशिपुर्नाम कश्चिद्दैत्यः । तस्य क्षेत्रं शरीरं तस्य दानेन विदारणेन विस्मयः येन दर्शितः स तथोक्तः । अत्र उपमालङ्कारः । श्लेषेण धर्मैक्यम् । एवमुत्तरत्रापि तत्र तत्र बोध्यम् । "एकोक्तया कशिपुर्भक्ताच्छादने च द्वयोः पृथक् ॥" इति विश्वः । " क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः ।" इति मेदिनी । "दानं मतं गजमदे रक्षणछेदशुद्धिषु । विश्राणनेऽपि ।" इति हैमः । दानमिति ददातः द्यतेश्च ल्युटि रूपम् । **कृष्ण इवेति** ।

यण इव सौकर्यसमासादितधरणीमण्डलः, कंसारातिरिव जनि-

---

कृतं वसूनां ध्रुवो धरश्च सोमश्चेत्युक्तानां अष्टानां वसूनां देवानां च तर्पणं प्रीणनं येन तादृशः। कृतं वसुभिः धनैः देवतर्पणं यागो येनेति वा। यद्वा कृतवसून् कालिकवर्षादिना प्रजानां जनितैश्वर्यान् देवान् कृतवसुं देवं इन्द्रं वा तर्पयतीति तथोक्तः। एतेन अस्य शास्त्रवश्यत्वम्, यागादीनां यथावदनुष्ठानम्, तेन च देवानां तुष्टिः, ततश्च वृष्ट्यादिना सुभिक्षम्, पश्चाच्च पुनरपि यागादिक्रियेत्येवमन्योन्योपकार्योपकारकभाव उक्तो भवति। तथा च भगवता गीतम्। "सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्। देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथ। इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः। तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥" इति। "दुदोह गां स यज्ञाय सस्याय मघवा दिवम्। संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम्॥" इति कालिदासश्च। अथवा कृतं वसुदेवस्य अग्निदेवस्य तर्पणं येन तादृशः। "उपरचितपशुपतिपूजनश्च निष्क्रम्य देवगृहान्निर्वर्तिताग्निकार्यः" इति शूद्रकवर्णने कादम्बरी। कृतवसुः कृतरश्मिः यो देवः सूर्यः तं तर्पयतीति वा। "मन्त्रपूतेन तोयाञ्जलिना दिवसकरमभिप्रणम्य" इति तत्रैव कादम्बरी। 'देवभेदेऽनले रश्मौ वसू रत्ने धने वसु।' इत्यमरः। पक्षे कृतं वसुदेवस्य तन्नाम्नः स्वपितुः तर्पणं येन तादृशः। 'वसुदेवोऽस्य जनकस्स एवानकदुन्दुभिः।' इति कृष्णप्रकरणे अमरः। **नारायण इवेति**। सौकर्येण निष्प्रयासं समासादितं संपादितं धरणीमण्डलं भूवलयं येन तादृशः। यद्वा शोभनः करः हस्तः यस्य सः सुकरः तस्य भावः सौकर्यम्। "भुजबलोपार्जित भूमण्डलः" इति तारापीडवर्णने कादम्बरी। 'करः राजदेयो भागः' इति कश्चित्। पक्षे सौकर्यं सूकरस्य

तयशोदानन्दसमृद्धिः, आनकदुन्दुभिरिव कृतकाव्यादरः, सागरशायीव अनन्तभोगिचूडामणिमरीचिरञ्जितपादः, वरुण इ-

वराहस्य भावः कर्म वा । **कंसारातिरिवेति** । कंसस्य अरातिः शत्रुः कृष्णः । यशः कीर्तिः, दाः दानम्, आनन्दः, एतेषां समृद्धिः संपत्तिः जनिता उत्पादिता येन स तथोक्तः । दा इति भावे क्विप् । यद्वा यशो ददातीति यशोदा तादृशी आनन्दसमृद्धिः जनिता येन तादृशः । आत्मन आनन्दसमृद्धयेऽपि यशस्विन्येव पथि प्रवर्तत इति भावः । यशोदेषु आनन्दसमृद्धिः येन जनिता स इति वा। पक्षे यशोदा नन्दश्च कृष्णस्य पोषकौ मातापितरौ । तयोः आनन्दसमृद्धिः येन जनिता तादृशः । **आनकदुन्दुभिरिवेति** । आनकदुन्दुभिः वसुदेवः । कृतः काव्येषु आदरो येन तादृशः । कृतकाव्येषु कविषु आदरो यस्येति वा । यद्वा काव्या बुद्धिः कृतकाव्याः कृतबुद्धयः तेषु आदरो यस्य स तथा । पक्षे कृतं कलितं काव्यायाः पूतनायाः दरं भयं येन स तथा । कंसनिदेशादितः प्रस्थिता पूतना किन्नु नाम करिष्यत्यमङ्गलमित्युत्पन्नभय इत्यर्थः । "काव्यं ग्रन्थे पुमान् शुक्रे काव्या स्यात्पूतनाधियोः ।" इति मेदिनी । "दरोऽस्त्री भयशङ्कयोः । दरन्त्वव्ययमल्पार्थे" इति नानार्थरत्नमाला । यद्वा कृतकः कृत्रिमः दौर्जन्यभयान्नाटितः अवौ प्रभौ कंसे आदरो यस्य स तथा । "अविर्नाथे रवौ मेषे शैले मूषिककम्बले ।" इति मेदिनी । "कृतकार्वा तत्पुत्रौ तयोरादरो यस्येति गुरुचरणाः ।" इति शिवरामः । **सागरेति** । अनन्तः तन्नामा भोगी सर्पः शेष इत्यर्थः । पक्षे अनन्ताः अभ्यधिकाः भोगिनः राजानः विलासिनो वा । मरीचयः किरणाः । "अनन्तः केशवे शेषे पुमान्निरवधौ त्रिषु ।" इति मेदिनी । "भोगस्तु भोजने वित्ते निर्वेशे पालने सुखे । वनितादिभृतौ राज्ये सर्पस्य फणका-

**वाशान्तरक्षणः, अगस्त्य इव दक्षिणाशाप्रसाधकः, जलनिधि-**

---

ययोः ।" इति नानार्थरत्नमाला । **वरुण इवेति ।** आशान्तं सर्वतः शमसहितं कलहादिक्षोभरहितं रक्षणं यस्य स तथा । यद्वा अन्याः आशाः दिशः आशान्तराणि तेष्वपि क्षणः उत्सवः यस्य सः तथोक्तः । वैदेशिकैरप्यभिनन्द्यमान इत्यर्थः । अशान्तरक्षणमिति पदच्छेदेन अशान्तं अनवरतप्रवृत्तं रक्षणं यस्येति वा । यद्वा आशान्तरेषु अभिलाषान्तरेषु क्षणः विरामः यस्य स तथा संप्राप्तसर्वमनोरथ इत्यर्थः । आशानां मनोरथानां अन्तं अवसानं परां काष्ठां रक्षतीति तथा यावत्तृप्ति दातेत्यर्थ- इति वा । पक्षे आशान्तं दिगन्तं रक्षतीति तादृशः दिक्पाल इत्यर्थः । "आशा तृष्णादिशोः स्त्रियाम् ।" इति विश्वः । "क्षणः कालविशेषे स्यात्पर्वण्यवसरे महे । व्यापारविकलत्वे च परतन्त्रत्वमध्ययोः ।" इति हैमः । **अगस्त्य इवेति ।** दक्षिणानां कुशलानां प्राज्ञानां वा आशां अभिलाषं प्रकर्षेण साधयतीति तथा । दक्षिणायां आशा दक्षिणाशेति वा । पक्षे दक्षिणस्याः आशायाः दिशः प्रसाधकः अलङ्कर्ता । "दक्षिणः सरले प्राज्ञे विदग्धोदारयोरपि ।" इति भागुरिः । "दक्षिणो दक्षिणोद्भूत सरलच्छन्दवर्तिषु । अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम् ॥" इति मेदिनी । "अलङ्कर्ता प्रसाधकः ।" इति शब्दार्णवः । इतः परं धर्मैक्यसंपादकेन श्लिष्टविशेषणद्वयेन उपमां निर्वहति — **जल- निधिरिवेत्यादिना ।** जलनिधिः समुद्रः । वाहिनी सेना, पक्षे नदी । 'सेनानद्योश्च वाहिनी' इति भागुरिः । समः तुल्यः करस्य राजग्राह्य- भागस्य प्रचारो व्यवस्था यस्य स तथा । यद्वा मया लक्ष्म्या सहितः समः सलक्ष्मीकः करः हस्तः येषान्ते समकराः, तादृशाः प्रकृष्टाः चाराः स्पशाः यस्येति तथोक्तः । 'क्रियापवर्गेष्वनुजीविसात्कृताः कृतज्ञतामस्य वदन्ति

रिव वाहिनीशतनायकः समकरप्रचारश्च, हर इव महासेनानुयातो निर्जितमारश्च, मेरुरिव विबुधालयो विश्वकर्माश्रयश्च, रवि

---

संपदः ।' इति भारविः । 'समः सलक्ष्मीकः करस्य हस्तस्य प्रचारः यस्य' इति शिवरामः । पक्षे मकराणां नक्राणां प्रचारेण संचारेण सह वर्तत इति तादृशः । 'मकरो निधौ । नक्रे राशिविशेषे च' इति हैमः । **हर इवेति** । महासेनेन सुब्रह्मण्येन अनुयातः अनुगतः । "कार्तिकेयो महासेनः" इत्यमरः । पक्षे महत्या सेनया अनुयातः । निर्जितः मारः मदनः येन स तथा । उभयत्रापि तुल्यमेतत् । "हर इव जितमन्मथः" इति कादम्बरी । यद्वा राजपक्षे निर्जिताः विजिता माराः शत्रवः येन स तथा । निर्जितः मारो विघ्नो येनेति वा । "मारौ मन्मथशात्रवौ" इति भागुरिः । "मारोऽनङ्गे मृतौ विघ्ने" इति विश्वः । **मेरुरिवेति** । विबुधानां विदुषां आलयः आश्रयः । 'विः पक्षी तस्मिन् बुधाः शाकुनिका इत्यर्थः ।' इति कश्चित् । पक्षे विबुधाः देवाः । "विबुधौ सुरपण्डितौ ।" इति भागुरिः । विश्वस्य जगतः यत्कर्म रक्षणं तदाश्रयः । 'विश्वेषां जनानां कर्म शिल्पादि तदाश्रयः' इति शिवरामः । विश्वं समस्तं कर्म हस्त्यारोहचित्रलेखनादि तदाश्रय इति वा । यद्वा विश्वस्य जगतः कर्म शुभाशुभं तस्याश्रय इति स तथा । राज्ञस्तद्भागभागित्वादिति भावः । अथवा वीनां पक्षिणां शुनां कुक्कुराणां च यत्कर्म ग्रहणमोक्षादि तदाश्रयः पक्षिमृगाखेटचतुर इत्यर्थः । पक्षे विश्वकर्मा देवशिल्पी सूर्यो वा । **रविरिवेति** । क्षणे उत्सवकाले यद्दानं तत् प्रियं यस्येति स तथा । वा प्रियस्येति प्रियशब्दस्य परनिपातः । 'क्षणस्य उत्सवस्य दानं क्षणदानम्, यद्वा क्षणे विषुवादिपुण्यकाले दानं क्षणदानम्' इति कश्चित् । पक्षे

रिव क्षणदानप्रियः छायासन्तापहरश्च, कुसुमायुध इव जनितानिरुद्धसंपत् रतिसुखप्रदश्च, विद्याधरोऽपि सुमनाः,

---

क्षणदायाः रात्रेः नप्रियः । नप्रिय इति नशब्देन समासात् न नलोपः । 'क्षणं पूजादिकर्मणां निमेषादिक्षणं ददातीति क्षणदः । अनप्रियः अनाः प्राणिनः तेषां प्रियः लोकस्य प्रिय इति यावत् । अथवा अनप्रियः प्रिय एवेति यावत् । क्षणदश्चासौ अनप्रियश्चेति क्षणदानप्रियः' इति कश्चित् । छायया निजकान्त्या संतापं हरतीति तादृशः । चन्द्रस्येव तस्य कान्तेराह्लादकत्वादिति भावः । छायया लक्षणया अभिगम्यस्वभावतया सन्तापहर इति वा । 'छाः छेदनं छो छेदन इत्यस्मात् भावे क्विप् । छां छेदं यान्तीति छायाः दीनाः । यातेः कर्तरि क्विप् । तेषां सन्तापहरः' इति कश्चित् । पक्षे छाया सूर्यभार्या । "छाया सूर्यप्रिया कान्तिः प्रतिबिम्ब-मनातपः ।" इत्यमरः । **कुसुमेति** । जनिता उत्पादिता संपादिता वा अनिरुद्धा अनिवारिता संपत् समृद्धिः येन स तथा । जनिता अनि-रुद्धानां युद्धेषु अनिवारितानां वीराणां, चराणां वा संपत् येनेति वा । पक्षे अनिरुद्धो नाम प्रद्युम्नरूपिणः कामस्य पुत्रः । "अनिरुद्धश्चरे पुष्पचा-पसूनावनर्गले ।" इति हैमः । रतिसुखं क्रीडासुखं प्रददातीति तादृशः । कामतन्त्राभिज्ञ इत्यर्थः । पक्षे रतिः कामपत्नी तस्याः सुखं । इतः परं विरोधाभासेन वर्णयति । **विद्याधरोऽपीत्यादिना** । अत्र सर्वत्र आ-पातप्रतीयमानं विरोधमपिकारो द्योतयति । विद्याधरः देवयोनिविशेषः । सुमनाः देवः । देवयोनिविशेषस्य साक्षाद्देवत्वं विरुद्धम् । विद्याधरः चतुर्दशानां अष्टादशानां वा विद्यानामभिज्ञः । आन्वीक्षक्यादीनां चतुर्णां राजोपयुक्तानां विद्यानां वेत्तेति वा । "चतसृष्वपि ते विवेकिनी नृपविद्यासु निरूढिमागता ।" इति भारविः । सुमनाः शोभनहृदय इति परिहारः ।

धृतराष्ट्रोऽपि गुणप्रियः, क्षमानुगतोऽपि सुधर्माश्रयः, बृहन्नलानुभावोऽपि अन्तस्सरलः, महिषीसंभवोऽपि वृषोत्पादी,

---

एवमेवोत्तरत्रापि विरोधपरिहारौ बोध्यौ । "सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः ।" इति मेदिनी । **धृतराष्ट्र इति** । धृतराष्ट्रः दुर्योधनस्य पिता । गुणः भीमसेनः । दुर्योधनपितुर्धृतराष्ट्रस्य भीमसेनप्रियत्वं विरुद्धम् । पक्षे धृतं राष्ट्रं राज्यं येन तादृशः सुराजेत्यर्थः । गुणाः प्रसिद्धाः । "धृतराष्ट्रः खगे सर्पे सुराज्ञि क्षत्रियान्तरे ।" इति हैमः । मौर्वीसूदवृकोदरतन्त्वावृत्तीन्द्रियेषु रूपादौ । सत्वादौ सन्ध्यादौ त्यागादावप्रधाने च गुणः ॥" इति नानार्थरत्नमाला । **क्षमेति** । क्षमां भूमिं अनुगतः प्राप्तः । सुधर्मां देवसभां आश्रित इति विरोधः । क्षमा क्षान्तिः । शोभनो धर्मः सुधर्मः तं आश्रितः । यद्वा शोभनो धर्मो येषान्ते सुधर्माणः तैः आश्रित इति परिहारः । **बृहन्नलेति** । बृहन् महान् यो नलः तृणविशेषः नलं पद्मं वा तमनुसृत्य भाव उत्पत्तिर्यस्य तादृशः । अन्तः मध्ये सरलः वृक्षविशेषः । तृणविशेषानूद्भूतस्य तत्वावश्यंभावेन मध्ये सरलवृक्षत्वामिति विरुद्धम् । पक्षे बृहन्नला विराटनगरे तत्संज्ञकः अर्जुनः तस्यैव अनुभावो माहात्म्यं यस्य स तथा । बृहन् नलस्य नलमहाराजस्येव अनुभावो यस्येति वा । अन्तः मनसि सरलः उदारः, रसिको वेति परिहारः । "नलो राज्ञि कपौ नडे । पितृदैवेऽथ नलं स्यात्पद्मे" इति हैमः । "सरलः पूतिकाष्ठे नाथोदारावक्रयोस्त्रिषु ।" इति मेदिनी । "सरलो रसिकस्समौ ।" इति वैजयन्ती । 'बृहन् महान् यो नलस्तृणभेदस्तस्येवानुभावो यस्य । यथा यत्नानपेक्षः सोऽभिवर्द्धते तथायमपीत्यर्थः । तादृशोऽप्यन्तर्मध्ये सरलो ग्रन्थिरहित इति विरोधः ।' इति शिवरामः । **महिषीति** । महिषस्य स्त्री महिषी । वृषः वृषभः ।

अतरलोऽपि महानायकः, राजा चिन्तामणिर्नाम । यत्र च शासति धरां छलनिग्रहप्रयोगो न्यायशास्त्रेषु

महिषीसंभवस्य माहिषजातीयत्वेन वृषभोत्पादित्वं विरुद्धम् । पक्षे महिषी कृताभिषेका राज्ञी । वृषः धर्म इति परिहारः । "महिषी नृपयोषिति। सैरिभ्यामोषधीभेदे" इति हेमचन्द्रः । "कृताभिषेका महिषी" इत्यमरः। "वृषो धर्मे बलीवर्दे शृङ्ग्यां पुंराशिभेदयोः ।" इति मेदिनी । **अतरल इति**। तरलः मध्यमणिः । तद्भिन्नः अतरलः । महान् श्रेष्ठः नायकः मध्यरत्नम् । मध्यमणिभिन्नस्य मध्यमणित्वं विरुद्धम् । पक्षे तरलः चञ्चलः स न भवतीत्यतरलः धीरः । महान् नायकः नेता इति परिहारः । "तरलो भास्वरे चले । हारमध्यमणौ षिड्गे" इति, "नायको नेतरि श्रेष्ठे हारमध्यमणावपि ।" इति च क्रमेण हैमविश्वौ । नामेति प्रसिद्धावव्ययम्। "आभासत्वे विरोधस्य विरोधाभास इष्यते।" इति विरोधाभासलक्षणम्। **यत्रचेति** । यस्मिन् चिन्तामणिनाम्नि नृपतौ । धरणीमण्डलं शासति रक्षति, एवं परं एवमेव व्यवस्थितमित्यन्वयः । **छलेति** । छलस्य "वचनविघातोऽर्थविकल्पोपपत्त्या छलम्" इति सूत्रलक्षितस्य त्रिविधस्य छलस्य, जातेः "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" इति निरूपितायाः जातेः, निग्रहस्य "विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्" इति लक्षितस्य निग्रहस्थानस्य च प्रयोगः छलजातिनिग्रहप्रयोगः । वादेषु "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" इति लक्षितेषु शास्त्रार्थविमर्शेष्वेव, न तु प्रजासु, तद्व्यवहारेषु वा, छलेन कपटेन जातेः शूद्रत्वादिजातेः निग्रहस्य निह्नवस्य प्रयोगः उक्तिः । यद्वा छलजात्या कपटजन्मना छद्मपरिग्रहेणेत्यर्थः । निग्रहस्य बन्धनस्य भर्त्सनस्य वा प्रयोगः करणं । यद्वा निग्र-

इत्यलुग्विधानस्य बाहुलकत्वात् सुपो लुक् । वल्लव्यो गोपजातिस्त्रियः । वल्लवशब्दाज्जातिलक्षणो ङीष् । वल्लव्य इति जना वल्लवीजना इति कर्मधारयः । स्त्रीलिङ्गस्य परनिमित्तस्याभावात् "पुंवत्कर्मधारय" इत्यादिना वल्लवीशब्दस्य न पुंवद्भावः । तेषां वल्लभं "सत्यवागार्जवरतैरुपकुर्वन् प्रियं वदन् । भजते यः स्वयं पूर्णः प्रियः स भवति स्त्रियाः ।" इत्युक्तलक्षणं प्रियम् । "दयितं वल्लभं प्रियम् ।" इत्यमरः । जयन्ती रोहिणीसहिता श्रावणमासस्य कृष्णाष्टमी "जयं पुण्यञ्च तनुते जयन्तीं तेन तां विदुः ।" इति पौराणिकैर्निरुक्ता । पृषोदरादित्वात् साधुः । तस्यां सम्भवं प्रादुर्भूतं भवतेः पचाद्यच् । "अज्विधिस्सर्वधातुभ्यः" इति वचनात् । सप्तमीति योगविभागात् समासः । वैजयन्ती वनमाला सा विभूषणं यस्य तथाभूतं । धाम स्वप्रकाशज्योतिर्मयं वस्तु वासुदेवाख्यम् वन्दे प्रणमामीति योजना । वन्द इति वर्तमाननिर्देशः स्ववन्दनस्य सदानुवृत्तिपरः, न तु प्रबन्धारम्भसमयवर्तमानत्वमात्रपरः। सङ्कोचे हेत्वभावात् । सकृत्प्रपदनमात्रेणाभीष्टप्रदे भगवति सतां भक्तिवशात्तदनुसन्धानविशेषरूपस्य मानसनमस्कारस्य सदानुवृत्तेः । विशेषणबलादेव भगवान्वासुदेवो विशेष्यं लभ्यत इति विशिष्य विशेष्यानिर्देशः । यथाह वामनः "विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ" इति । भगवतस्सुखसेव्यत्वोपयुक्ताश्चत्वारो गुणाः वात्सल्यं, सौशील्यं, सौलभ्यं, स्वामित्वमिति । तत्र वात्सल्यं वत्से धेनोरिव स्नेहः । सौशील्यं महतो मन्दैः सह नीरन्ध्रसंश्लेषस्वभावः । सौलभ्यं लब्धुं सुशकत्वं सुखेन सन्निधानदातृत्वम् । स्वामित्वं स्वकीयत्वाभिमानः। वात्सल्येन सेवकस्य स्वापराधभयम्, सौशील्येन परमेश्वरताप्रयुक्तानभिगम्यत्वभयम्, सौलभ्येन 'न सन्दृशे तिष्ठति रूपमस्य' इत्यादिवेदान्तवाक्यश्रवणकृतागोचरत्वभयम्, स्वामित्वेन वात्सल्यादिमूलभूतसंबन्धाभावभयं च निवर्त्यत इत्येतेषां सुखसेव्यत्वे उपयोगः । क्रमेण एते गुणाः विशेषण-

चतुष्टयेनानुसंहिताः। तत्र गोवत्सानुचर्यारूपबृन्दावनसञ्चारप्रतिपादकेनाद्य-विशेषणेन तिर्यग्जातिसाधारणं तस्य वात्सल्यं व्यज्यते । निखिलवनिता-जनमूर्द्धन्यश्रीमहालक्ष्मीनिरन्तराश्लेषनित्यतृप्तस्य पामरजातिस्त्रीजनसं-श्लेषः सौशील्यैककृत इति द्योतयितुमेव द्वितीयविशेषणे वल्लवीति ङीषा तासां गोपजातीयत्वमुक्तम् । जनशब्देनापि पामरत्ववाचिना सौशील्यमेव स्थिरीक्रियते । "जनो लोके महर्लोकात् परलोके च पठ्यते ।" इति विश्वप्रकाशः। अत एव जनशब्दस्याप्यर्थवत्ता। तृतीयविशेषणेनावताररूप-त्वोक्त्या सौलभ्यं व्यज्यते । "यस्यावताररूपाणि" इत्यादिष्ववताराणां सौलभ्यप्रसिद्धेः। चतुर्थविशेषणेन "स्वां मायां वैजयन्तीं वनमालाख्या-नां गुणमयीं दधाति' इति श्रीभागवतोक्तरीत्या मायारूपाया वैजयन्त्या भूषणतया विशेषणत्वप्रतिपादनेन मायाधिष्ठानजगत्कारणब्रह्मरूपत्वा-भिव्यक्त्या स्वामित्वं व्यज्यते। 'स कारणं करणाधिपाधिपः' इति जीवान् प्रति स्वामित्वश्रुतेः । अनेनैव विशेषणेन जगत्कारणब्रह्मरूपत्वस्याक्षिप्त-तया सर्वज्ञत्वसर्वशक्तित्वादयो भगवतः कार्यकरत्वोपयोगिगुणा अप्यनु-संहिताः । प्रबन्धनिर्माणरूपप्रस्तुतकार्यविशेषोपयोगितया धामेति ज्ञान-शक्तिप्राधान्येन भगवाननुसंहितः। अपि च एभिरेव विशेषणैरस्य काव्यस्य प्रेक्षावत्प्रवृत्त्युपयोगिविषयप्रयोजनसूचनमपि क्रियते। तथाहि। बृन्दावन-चरमित्यादिना विशेषणत्रयेण भगवतो बृन्दावनसञ्चारादिकं चरितमस्य विषय इति सूच्यते । तेनैव तस्य शृङ्गारवीराद्भुतरसभरितत्वविभावनात् तदास्वादः प्रयोजनमिति सूच्यते। जयन्तीसंभवमिति भगवदाविर्भावतिथौ जयन्तीपदप्रयोगेण तस्य जयशीलत्वव्यञ्जनेन तच्चरितस्य वीररसमयत्वं विभाव्यते । वल्लवीजनवल्लभमित्यनेन शृङ्गारप्रचुरत्वम् । बृन्दावनचरमित्य-नेन बृन्दावनचरितगोवर्द्धनोद्धरणादिकृताद्भुतरसप्रायत्वमिति । शृङ्गारवीरा-द्भुतमयत्वाद्भगवतः श्रीकृष्णस्य । यद्वक्ष्यति द्वितीयसर्गे देवकीगर्भवर्णने

"शृङ्गारवीराद्भुतचित्तमन्तस्तस्यास्त्रिलोकैकनिधिं वहन्त्या।" इति । तत्र वीररसः प्रधानभूतः, भूभारावतरणार्थत्वादवतारस्य। तत्प्राधान्यं द्योतयितुं तद्व्यञ्जकविशेषणं विशेष्यसन्निहितं कृतं "जयन्तीसंभवं धाम" इति । एवं अवान्तरप्रयोजनं विशेषणत्रयेण विभाव्यते । परमप्रयोजनं च वैजयन्ती-विभूषणमित्यनेन कृष्णस्य परब्रह्मत्वरूपत्वाभिव्यक्त्या काव्यस्य परब्रह्म-गोचरतया पुण्ड्रेक्षुभक्षणवेतनतुल्यं मुक्तिरूपं सूच्यते, परब्रह्मसंशीलनस्य मुक्तिपर्यवसायित्वादिति । एवं विशेषणानां साभिप्रायत्वात्साभिप्राय-विशेषणविन्यासरूपः **परिकरो** नामार्थालङ्कारः। वन्दे वृन्देति वल्लवीवल्लभ-मिति जयन्ती वैजयन्तीति च पदेषु वर्णसमत्वाद्वर्णसमत्वरूपोऽ**नुप्रासः** शब्दालङ्कारः । यमकत्वप्रयोजकस्थानानियमाभावादत्र न क्वापि यमक-शङ्का । वन्द इति वर्तमानव्यपदेशेन प्रागुक्तरीतया कवेर्भगवद्विषयो रतिभावो व्यज्यत इति भावध्वनिः । तेन तथाभूतमहापुरुषकृतकाव्यस्य नायकगौरवेणेव प्रबन्धृगौरवेणाप्युपादेयत्वं व्यज्यत इति वस्तुध्वनिः । ततो नेतृप्रबन्धृगौरवेण फलोत्कर्षेण चास्य काव्यस्यानीदृक्काव्या-न्तरेभ्योऽतिशयो व्यज्यत इति व्यतिरेकालंकारध्वनिश्च । प्रसादा-दयो गुणाश्चात्र श्लोके यथासंभवं द्रष्टव्याः । भूदेवताकस्य मगणस्या-मृतबीजस्य वकारस्य च प्रथमं प्रयोगाद्गणवर्णशुद्धिस्सुव्यक्ता । यद्यपि वन्द इति धातुरौत्तराहाणामोष्ठ्यादिः। "भ्वादौ स तु पवर्गीयादौ बाध-वन्दती" इति बंकिषपतिना पवर्गतृतीयादिरुक्तः । तथापि यथा शाडृ श्ला-घायामिति धातोर्धातुपाठे टवर्गतृतीयान्तत्वेऽपि डलयोरैक्यात् लोके रूपशाली भाग्यशालीत्यादौ लान्तः प्रयोगः, एवं बवयोरैक्यात् अन्त-स्स्थादिरेव लोकेऽस्य प्रयोगः । माधवीयायां तु धातुवृत्तावयं धातुपाठेऽ-प्यन्तस्स्थादिरङ्गीकृतः । यद्वा, काव्यारम्भप्रतिज्ञापरोऽयं श्लोकः । अस्मिन् पक्षे वन्दे स्तुवे । "वर्तमानसामीप्ये" इति लट्, स्तोष्य इत्यर्थः ।

वदि अभिवादनस्तुत्योरिति धातोरिह स्तुत्यर्थः परिगृह्यते । तथा च तत्त-च्चरितमुखेन भगवद्दिव्यगुणानुसंकीर्तनरूपतया स्तुत्यात्मकस्य काव्यस्या-रम्भः प्रतिज्ञातो भवति । इदञ्च पद्यं **युग्मविपुला वृत्तं । पथ्या-वक्त्र**मित्येके । "यस्यां लस्सप्तमो युग्मे सा युग्मविपुला मता ।" "युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ।" इत्युभयोरपि विच्छित्ति विशेषादिति ॥ १ ॥

**यदेकैकगुणप्रान्ते श्रान्ता निगमवन्दिनः ।**
**यथावद्वर्णने तस्य किमुतान्ये मितंपचाः ॥ २ ॥**

ननु अपरिमेयानन्तकल्याणगुणस्य भगवतो गुणकथनं कथं शक्य-मित्याक्षिपति— **यदेकैकेति** । निगमाः वेदा एव वन्दिनः सन्तमसन्तं वा कमपि गुणमवलम्ब्यावश्यं वन्दन्ते स्तुवन्तीति वन्दिनः स्तुतिपाठकाः । वन्दतिधातोस्स्तुतिवृत्तेः 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यावश्यकार्थे णिनि प्रत्ययः । यदेकैकगुणप्रान्ते यस्य भगवतः एकस्यैकस्य गुणस्याग्रभागे । श्रान्ताः श्रमं प्राप्ताः । स्तोतुं प्रवृत्ता एकमपि गुणं कात्स्न्र्येन वर्णयितुमशक्नु-वन्तः प्रारम्भ एव प्रतिहता इत्यर्थः । तस्य भगवतः । यथावत् यथार्हम्, वर्णने सम्यग्गुणवर्णने । अन्ये मितंपचाः क्षुद्राः । किमुत ते न शक्ता इति किमु वक्तव्यमित्यर्थः । एकैकेति वीप्सायां द्विरुक्तिः "एकं बहुव्रीहिवत्" इति बहुव्रीहिवद्भावात् सुपो लुक् । यथावदिति यथाशब्दात् "तदर्हम्" इत्यर्हार्थे वतिप्रत्ययः । मितम्पचा इत्यत्र 'मितनखे च' इति पचधातोः खश् । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । 'कदर्ये कृपणक्षुद्रकिं-पचानमितंपचाः ।' इत्यमरः । अयं भावः । 'नकिरिन्द्र त्वदुत्तरः, विश्व-स्मादिन्द्र उत्तरः' इत्यादिप्रकारेण इन्द्रादिदेवतान्तरेष्वसन्तमपि गुण-मारोप्य स्तवनशीला वन्दिकल्पा वेदा अपि यस्य गुणान् स्तोतुं प्रवृत्ताः

अनाद्यनन्तकालप्रवाहे अपरिमिततत्तत्कल्पवृत्तनानाविधतच्चरितावगम्योत्कर्षस्य एकैकगुणस्य प्रान्त एव श्रान्ताः, तावच्चरितकोट्यंशमात्रस्यापि कात्स्न्र्येन निबन्धुमशक्यत्वात् । तस्य निजनिखिलगुणवत्तया पौष्कल्येन वर्णने मनुष्यादिषु सन्तमपि गुणलेशं वर्णयितुमशक्ताः क्षुद्राः श्राम्यन्तीति किमु वक्तव्यमिति । अत्र कवेः काव्यारम्भे स्वविनयाविष्करणाय स्वाशक्तिप्रतिपादने प्रस्तुते सामान्यमभिहितमिति, अप्रस्तुतात्सामान्यात्प्रस्तुतविशेषप्रतीतेः **अप्रस्तुतप्रशंसा** । किमुतेति कैमुतिकन्यायोपन्यासात् **अर्थापत्तिः** । निगमवन्दिन इत्यभेदारोपात् **रूपकम्** । एतेषां च अलङ्काराणां परस्परानुप्राणितत्वेन संकरः । यद्यपि निगमवन्दिन इत्यत्र 'उपमितं व्याघ्रादिभिः' इति सूत्रेण निगमा वन्दिन इवेति उपमितसमासोऽपि संभवति । तथापि श्रमसम्बन्धानुरोधात् उत्तरपदार्थप्रधानो मयूरव्यंसकादिसमास एवेति रूपकनिर्णयः । उपमितसमासे हि पूर्वपदार्थप्राधान्यात् तत्र मुख्यार्थश्रमसंबन्धो न स्यात् ॥ २ ॥

**शक्त्या शौरिकथास्वादः स्थाने मन्दधियामपि ।**
**अमृतं यदि लभ्येत किं न गृह्येत मानवैः ॥ ३ ॥**

इममाक्षेपं समाधत्ते— **शक्त्येति** । मन्दधियामल्पबुद्धीनामपि । शक्त्या यावच्छक्ति । शौरिकथास्वादः शूरस्य वसुदेवपितुरपत्यं शौरिः कृष्णः, बाह्वा देराकृतिगणत्वादिञ्प्रत्ययः 'एको गोत्रे' इति नियमात् व्यवहितापत्येऽपि परमप्रकृतेरेव प्रत्ययः । तस्य कथाया आस्वादः निबन्धनरूपः । स्थाने उचितः । 'स्थाने स्यादुचितेऽव्ययम् ।' इति रत्नमाला । तत्र दृष्टान्तमाह— अमृतं यदि लभ्येत, मानवैः किं न गृह्येत नास्वाद्येत आस्वाद्येतैवेत्यर्थः । 'हेतुहेतुमतोर्लिङ्' । अयं भावः—अशक्येऽपि कात्स्न्र्येन भगवद्गुणवर्णने यावती बुद्धेः प्रसरणशक्तिस्तावद्वर्णनं मन्दधियामपि युक्तमेव ; न तु यावद्वर्णना-

शक्त्या शक्यांशोऽप्युपेक्षणीयः। न हि बहुमृतं मानवैर्न लभ्यत इति किञ्चिदपि लब्धं तैर्नास्वाद्यत इति। यद्वा एवं भावः। यथा अमृतं लभ्यते चेन्मनुष्या देवार्हमिदमिति स्वयं न त्यजन्ति, किन्तु लब्धमास्वादयन्त्येव; एवं मन्दबुद्धितया भगवद्गुणसाकल्यवर्णनानधिकृता अपि रसज्ञातिप्राज्ञकृत्यमिदमिति नोदासते; किन्तु शक्यांशं वर्णयन्त्येव। अतो ममापि यथामति भगवच्चरितवर्णनप्रवृत्तौ न कोपि दोष इति। अत्रापि पूर्ववत् **अप्रस्तुतप्रशंसा**। उपमानोपमेययोर्भगवच्चरितामृतयोस्सामान्यधर्मयोः क्वचिन्निबन्धनमन्यत्रास्वादनमिति भिन्नयोर्बिम्बप्रतिबिम्बभावेन वाक्यद्वयेन निर्देशात् **दृष्टान्तः**। आस्वादशब्देन निबन्धनस्य निगीर्याध्यवसानात् भेदे अभेदरूपा**तिशयोक्तिश्च** अलङ्कारः। निगीर्याध्यवसानेन च तृष्णातिरेकविषयत्वं लक्षणामूलं व्यङ्ग्यम्। तच्चोक्तदृष्टान्तस्योपस्कुरुत इति गुणभूतव्यङ्ग्यभेदः॥ ३॥

**वसुधाश्रोत्रजे तस्मिन् व्यासे च हृदयस्थिते।**
**अन्येऽपि कवयः कामं बभूवुरनपत्रपाः॥ ४॥**

**वसुधेति**। वसुधाश्रोत्रं वल्मीकम् 'वामलूरुश्च भूश्रवः' इति वल्मीकपर्यायेषु रत्नकोशः। 'श्रोत्रं ह्येतत् पृथिव्याः यद्वल्मीकः' इति श्रुतिः। तत्र जातो वसुधाश्रोत्रजः वाल्मीकिः तस्मिन्। 'सप्तम्यां जनेर्डः' इति डप्रत्ययः। तस्मिन् प्रसिद्धे यस्तादृशमादिकाव्यं निर्ममे इति भावः। व्यासे च महाभारतनिबन्धरि। हृदयस्थिते मनसि स्फुरति सति। अन्येऽपि तदुभयव्यतिरिक्ता अपि। काममत्यर्थम्। अनपत्रपाः रामायणं महाभारतं च दृष्ट्वा स्वप्रबन्धान् पश्यन्तः कथं नापहसिष्यन्तीति परेभ्यस्त्रपया रहिता एव। 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः' इत्यमरः। कवयः काव्यकृतो बभूवुः। व्यासवाल्मीकिप्रबन्धौ दृष्ट्वापि तदन्येषां स्वयं प्रबन्धनिर्माणे-

प्रवृत्तिः केवलं निरपत्रपकृत्यमेवेति तयोः प्रशंसापरोऽयं श्लोकः । यद्वा, प्राचां महाकवीनां प्रबन्धेषु सत्सु स्वकीयप्रबन्धनिर्माणप्रवृत्तावनौचित्य-परिहारेण स्वविनयाविष्करणार्थोऽयं श्लोकः । अत्र पक्षे अन्येऽपि मद-न्येऽपीत्यर्थः । अयं भावः—मदन्येऽपि हि कवयः सत्येव रामायणे भारते च यथा प्रबन्धं निरमिमत, एवं मयापि निर्मीयते । यथामति निर्माणे कापत्रपेति ॥ ४ ॥

**स कविः कथ्यते स्रष्टा रमते यत्र भारती ।**
**रसभावगुणीभूतैरलङ्कारैर्गुणोदयैः ॥ ५ ॥**

**स इति** । रसाः शृङ्गारादयः, भावाः तत्तद्रसोचिता विभावानुभावसञ्चा-रिणः, गुणीभूतानि 'अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् । सन्दिग्ध-तुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥' इत्युक्तरूपाणि अगूढत्वापराङ्गत्वा-दिनिमित्तैरप्राधान्यं प्राप्तानि व्यङ्ग्यानि तैः । अलङ्काराः अनुप्रासोपमादयः तैः । गुणोदयाः माधुर्यादीनां रससमवेतानां गुणानां तत्तद्गुणोचितवर्णसमा-सरचनाभिव्यक्तयः तैः, प्रकारैः उपलक्षिता । भारती वाणी । यत्र रमते यस्मिन् बलादाकृष्यमाणतां विना स्वयमेव निरर्गळप्रवाहरूपा वर्तते । सः स्रष्टा अन्यैः कविभिरनुल्लिखितस्यार्थस्य प्रतिभया निष्पादकः । कविः कथ्यते कविरिति व्यपदिश्यत इति प्रकृतोऽर्थः । अपि चात्र रसभावाः रागप्रयुक्ता नयनादाववलोकनमन्दस्मिताद्यनुभावाः तेषां गुणीभूतैरुप-स्कारकैः तद्विजृम्भणहेतुभूतैरिति यावत् । अलङ्कारैः कटककेयूरादिभिः । गुणैः रूपयौवनादिभिः उदयन्ते नायकदर्शनेनोद्गच्छन्तीत्युदयाः दृष्टि-विकारादयः तैश्च । उपलक्षिता 'आलम्बनगुणाश्चैव तच्चेष्टा तदलंकृतिः । तटस्थाश्चेति विज्ञेयश्चतुर्थोद्दीपनक्रमः ।' इति नायिकागुणालङ्कारचेष्टानां नायकरतिभावोद्दीपनहेतुत्वमुक्तम् । एवंभूता भारती वाग्देवता, यत्र रमते

रतिं करोति । सः, स्रष्टा लोकानां निर्माता चतुर्मुखः कविरिति व्यपदिश्यते । 'तेने ब्रह्महृदाय आदिकवये' इत्युक्तोऽप्रकृतोऽर्थः प्रतीयते । तेन च यथा सरस्वतीविहारास्पदीभूतश्चतुर्मुखः कविर्व्यपदिश्यते ; एवमुक्तरूपविशिष्टकविताशाल्येव कविर्व्यपदिश्यते इत्युपमालङ्कारो ध्वन्यते । अनेन तादृशस्य कवित्वविधानेन तादृशरसभावादिचमत्काररहितमेव प्रबध्नन्तः परोच्छिष्टोपजीविनश्च कवयो न भवन्तीति व्यज्यते । तेषु च कवित्वनिषेधोबाधितः सन् तेषामपहास्यत्वादौ विशेषे पर्यवस्यतीत्यभिमताविशेषद्योतनार्थनिषेधाभासरूप **आक्षेपालङ्कारो** ध्वन्यते । अनेनस्वयं कुकवीनामुपालम्भेन नाहन्तथाभूत इति स्वकविताप्रौढिप्रकटनात् पूर्वश्लोके विनयाविष्करणेन स्वकाव्यस्य फल्गुकर्तृकत्वशङ्का माभूदिति रसभावादिभरिततया सारतरत्वं द्योत्यत इति शब्दशक्तिमूलकवस्त्वलङ्कारध्वनिपरम्परानुसन्धेया ॥ ५ ॥

**तदात्वे नूतनं सर्वमायत्यां च पुरातनम् ।**
**न दोषायैतदुभयं न गुणाय च कल्पते ॥ ६ ॥**

अथ स्वकाव्ये नूतनमित्येव ये दोषमुद्भावयेयुर्मन्दास्तान् प्रत्याह—**तदात्व इति ।** सर्वं इदानीन्तनं प्राक्तनं चेत्यखिलम् प्रबन्धजातम् । तदात्वे तत्काले । नूतनम् । आयत्यामुत्तरकाले । पुरातनम् । चकारो भिन्नक्रमः । एकत्र धर्मद्वयसमुच्चयार्थः । 'तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः ।' इत्यमरः । एतदुभयं नूतनत्वं पुरातनत्वं च । न दोषाय, न गुणाय च कल्पते । 'क्लृपिसंपद्यमाने च वक्तव्या' इति चतुर्थी । यत् नूतनत्वेन दूषयितुं इष्यते तदेव कालान्तरे पुरातनं जायते । यच्च पुरातनत्वेन उपादातुमिष्यते तदपि स्वकाले नूतनमिति न ते प्रबन्धेषु हानोपादानप्रयोजके, किन्तु तत्तल्लक्षणवैकल्यसाकल्ये एवेति भावः ॥ ६ ॥

**प्रवृत्तामनघे मार्गे प्रमाद्यन्तीमपि क्वचित् ।**
**न वाचमवमन्यन्ते नर्तकीमिव भावुकाः ॥ ७ ॥**

**प्रवृत्तामिति** । अघं पापं 'अघशब्दो भवेत् पापे दुःखव्यसनयोरपि' इति अजयः । तद्विरुद्धः अनघः । अधर्मवन्नञ्समासः । अविरुद्धे तस्मिन् सकलपापक्षयकारिणि । मार्गे भगवच्चरितसंग्रथनरूपे पथि । प्रवृत्तां वाचं कविताम् । क्वचित् सूक्ष्मे भगवच्चरितरहस्यादिविषये शब्दार्थगुणदोषादिविषये वा । प्रमाद्यन्तीमनवधानामपि । भावुकाः भावनाकृतो भगवद्भक्ताः । 'भुवोऽवकल्कने' इति भवतेर्णिजन्तात् 'लषपत' इत्यादिना उकञ्प्रत्ययः । अवकल्कनं चिन्तनमिति व्याख्यातम् नावमन्यन्ते क्वचित् प्रमादमात्रेण न तत्रावमानं कुर्वन्ति किन्तु भगवद्विषयं यथाकथञ्चित् अबद्धमपि निखिलाघविध्वंसनमिति परिगृह्णन्त्येवेत्यर्थः । उक्तं च श्रीभागवते । 'स वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि । नामान्यनन्तस्य यशोऽङ्कितानि यत् शृण्वन्ति गायन्ति गृणन्ति साधवः ।' इति । नर्तकीमिवेत्युपमाननिर्देशः । अत्र पक्षे अनघे विगलितवेद्यान्तरनाट्यरसास्वादनेन दुःखविरोधिनि । मार्गे मार्गो देशीति द्विधा नृत्तमुक्तं सङ्गीतशास्त्रेषु । तत्र मार्गाख्ये नृत्ते । प्रवृत्तां नर्तकीमिव मार्गनृत्ते कृतशिक्षां वनितामिव । 'नर्तकः सुरभिः प्रोक्तो मार्गनृत्ते कृतश्रमः ।' इति सङ्गीतरत्नाकरः । 'शिल्पिनि ष्वुन्' इति ष्वुन्प्रत्यये 'षिद्गौरादिभ्यश्च' इति ङीष् । भावुकाः तत्तद्भावचेष्टाविशेषज्ञाः । 'भावा विनैव चेष्टाभिर्न दृश्यन्ते कदाचन । तस्माच्चेष्टाविशेषज्ञा भावुका रसिकाः स्मृताः ॥' इति शारदातनयः । अत्र मार्ग इति भावुका इति च भिन्नार्थशब्दानां युगपदुदीरणात् **श्लेषः** । श्लिष्टपदोपात्तयोरर्थयोरुपमायां सामान्यधर्मत्वसिद्ध्यर्थमभेदाध्यवसायात्तन्मूलातिशयोक्तिश्च । तदनुप्राणितश्च नर्तकीमिवेति **उपमालङ्कारः** ॥ ७ ॥

**विहाय तदहं व्रीडां व्यासवेदार्णवामृतम् ।**
**वक्ष्ये विबुधजीवातुं वसुदेवसुतोदयम् ॥ ८ ॥**

**विहायेति** । तत्तस्मादुक्तहेतोः । अहं व्रीडां यत्किञ्चिदवलम्ब्यापहसिष्यन्तीति त्रपम् । विहाय । व्यासवेदार्णवामृतं व्यासवेदो महाभारतं तदेवार्णवः तस्यामृतं अमृतवत् सारभूतम् । विबुधा विद्वांसः त एव विबुधा देवाः इति श्लिष्टरूपकम् । तेषां जीवातुं भक्तं जीवनौषधं च । देवानां भक्तममृतम्, प्रबन्धो विदुषाम् । हृदयाप्यायनत्वादुपचारात् । 'जीवातुर्जीविते भक्ते जीवातुर्जीवनौषधम् ।' इति विश्वः । वसुदेवसुतस्य कृष्णस्य उदयमभ्युदयम् । वक्ष्ये अभिधास्ये वर्णयिष्य इत्यर्थः । ब्रुवो वचिरात्मनेपदी । अत्र व्यासवेदार्णवामृतमिति विबुधजीवातुमिति च **श्लिष्टाश्लिष्टशब्दनिबन्धनरूपकद्वयसङ्करः** ॥ ८ ॥

**क्रीडातूलिकया स्वस्मिन् कृपारूषितया स्वयम् ।**
**एको विश्वमिदं चित्रं विभुः श्रीमानजीजनत् ॥ ९ ॥**

अथ 'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते । यत्रावतीर्णं कृष्णाख्यं पूर्णं ब्रह्म नराकृति ॥' इति यदुवंशश्रवणस्य परमपावनत्वस्मरणात् किञ्चिद्यदुवंशपरम्परावर्णनपूर्वकं भगवच्चरिताविवक्षया प्रथमं यदुवंशकूटस्थस्य चन्द्रमसः पुरुषसूक्तप्रक्रियया पुरुषोत्तमस्य मानसादुत्पत्त्यभिधित्सया तदुपोद्घातत्वेन भगवता पुरुषोत्तमेन सर्वमिदं जगत्सृष्टमित्यर्थं तावदाह— **क्रीडेति** । विभुः निखिलजगत्सृष्टिपालनसंहारानुकूलविविधशक्तियोगात् निरतिशयवैभवः । श्रीमान् नित्ययोगे मतुप् । अनपायिन्या श्रीमहालक्ष्म्या नित्ययुक्तः पुरुषोत्तमः । एकः सहायान्तरनिरपेक्ष एव । इदं विश्वं जगत् समस्तं वा । 'विश्वं समस्तजगतोः' इति विश्वः, चित्रमाश्चर्यभूतं तदेव

चित्रमालेख्यमिति श्लिष्टरूपकम् । 'आलेख्याश्चर्ययोश्चित्रम् ।' इत्यमरः । कृपारूषितया दयारसेन दिग्धया। क्रीडातूलिकया स्वलीलैव तूलिका आलेख्यकूर्चिस्तया। स्वयं स्वतन्त्रेण आत्मना। स्वस्मिन्नात्मन्यधिकरणे। अजीजनत् जनयामास । जनिधातोर्णिचि लुङि रूपं। भूतसामान्यविवक्षया च लुङ्प्रयोगः । अत्र स्वयं स्वस्मिन्निति विशेषणद्वयेन भगवतः प्रपञ्चनिमित्तोपादानोभयविधकारणत्वं दर्शितम्। तस्य समाभ्यधिकराहित्यं विभावयितुं अनेककोटिब्रह्माण्डघटितस्यास्य प्रपञ्चस्य निर्माणे सहायान्तरनैरपेक्ष्यं दर्शितं एक इति । एतावत्प्रपञ्चनिर्माणे असहायस्य कर्तृत्वे असंभावनां व्यावर्तयितुं सर्वशक्तिमयत्वं दर्शितं विभुरिति। प्रकरणोपपदादिसङ्कोचरहितं हि विभुपदं तस्य निरतिशयं वैभवं प्रख्यापयति। नित्यावाप्तसमस्तकामस्य भगवतः प्रपञ्चनिर्माणं प्रयोजनाभावादनुपपन्नमिति शङ्कां वारयितुमुक्तं क्रीडातूलिकयेति । यथा सार्वभौमोऽवाप्तसकलकामोऽपि लीलया स्वयं कन्तुकादिकं करोति तथा भगवानपि प्रपञ्चमित्याशयः। ननु स्वस्य लीलेत्येतावता यदि जीवराशीन्नरकगर्भवासादिदुःखपङ्के निमज्जयति, तर्हि निष्करुण एव स्यात्। ततश्चास्य निखिलहेयप्रत्यनीकसमस्तकल्याणगुणपरिपूर्णत्वहानिरिति शङ्कां वारयितुमुक्तं कृपारूषितयेति। न केवलं लीलातूलिकया जगन्निर्माति; किन्तु कृपारूषितया। अत एव मुक्त्युपायप्रतिपादका अपि वेदभागा उपदिष्टाः। तदुपयोगीनि कर्माणि। तन्निर्वर्तकानि च व्रीह्यादीनि सृष्टानि । न हि जीवेषु निर्व्याजनिरतिशयकृपाराहित्ये नित्यतृप्तः स्वयं मुक्त्युपायकर्मादीन्युपदिशति । तथा निर्व्याजकृपालुत्वेऽपि निर्हेतुकमेव न मोचयति । स्वलीलायास्सर्वथैव विरोधप्रसङ्गात्। मोचकस्यापि भगवतो मुक्त्युपायधर्मसापेक्षत्वात् न वैषम्यनैर्घृण्ये, 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति न्यायादिति भावः । नन्वेवंविधो जगन्निर्माता पुरुषोत्तम एवेत्यत्र किं प्रमाणमित्याकाङ्क्षायां पुरुषसूक्तं तत्र प्रमाणं विभाव-

यितुमुक्तं श्रीमानिति । पुरुषोत्तम एव खलु श्रियः पतित्वेन प्रसिद्धः। पुरुषसूक्तानन्तरानुवाके च तदेकवाक्यतापन्ने 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति प्रकृते जगन्निर्मातरि पुरुषे श्रियः पतित्वं निबद्धम् । अतः पुरुषोत्तम एव जगन्निर्माता सिध्यतीत्यभिप्रायः । इत्थं विचिन्त्याः सर्वत्र भावाः सन्ति पदे पदे । कवितार्किकसिंहस्य काव्येषु ललितेष्वपि । तथापि विस्तरापत्तेर्नैवमग्रे प्रपञ्च्यते । काव्यव्याख्याकृतां रीतिः प्राचामेवानुगम्यते ॥ एवं विशेषणानां विशेष्यस्य च साभिप्रायत्वात् **परिकरपरिकराङ्कुरालङ्कारौ**। विशेषणसाभिप्रायत्वं परिकरः, विशेष्यसाभिप्रायत्वं परिकराङ्कुर इति तयोर्भेदः । क्रीडातूलिकयेति **रूपकम्** । रूपणान्वयानुसारतश्च क्रीडायास्तूलिकात्वारोपेण कृपाया रूषिकाया रागद्रव्यत्वारोपो गम्यत **इत्येकदेशवृत्तिरूपकालङ्कारः** । अनेन रूपकेणोत्थापितं च चित्रशब्दे श्लिष्टरूपकमिति तेनास्य संकरः ॥ ९ ॥

**जगदाह्लादनो जज्ञे मनसस्तस्य चन्द्रमाः ।**
**परिपालयितव्येषु प्रसाद इव मूर्तिमान् ॥ १० ॥**

**जगदिति** । तस्य पुरुषोत्तमस्य । मनसो मानसात् । जगदाह्लादनः लोकानामाह्लादयिता । बहुलग्रहणात् कर्तरि ल्युट् । चन्द्रमाः चन्द्रः । परिपालयितव्येषु रक्षितव्येषु । मूर्तिमान् प्रसाद इव तन्मनसः कृतज्ञत्वादिगुणस्तोम इव । जज्ञे जातः । जनिधातोः कर्तरि लिट् । 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्युपधालोपः । चन्द्रमसः जगदाह्लादनत्वादिनिमित्तेन भगवन्मनःप्रसादतादात्म्यसंभावनादु**त्प्रेक्षालङ्कारः** । 'कृतज्ञतोपकर्तृत्वं भूयो दोषानभिज्ञता । एष प्रसादश्चित्तानां लक्षणज्ञैरुदाहृतः ॥' इति शारदातनयः । यद्यपि श्रीविष्णुपुराणादिषु चन्द्रवंशोपक्रमे तस्यात्रिभवत्वमुक्तम्; तथापि चन्द्रवंश्यानां राज्ञां आभिजात्यातिशयज्ञापनार्थं 'चन्द्रमा

मनसो जातः' इति पुरुषसूक्तप्रक्रियैवात्रानुसृता । न चात्र विरोधः शङ्कनीयः । समयभेदेनोभयत्र तज्जननेनाविरोधात् । उक्तं हि वायवीये । 'तत्तत्कल्पान्तवृत्तान्तमाधिकृत्य महर्षिभिः । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥' इति ॥ १० ॥

**यदपत्यसमुद्भूतः पुण्यकीर्तिः पुरूरवाः ।**
**सतामाहितवह्नीनां विहारस्थेयतां ययौ ॥ ११ ॥**

**यदपत्येति** । यस्य चन्द्रमसोऽपत्यं बुधः तत्समुद्भूतः । पुण्या पुण्यकरी कीर्तिर्यस्य स तथोक्तः । पुण्यशब्दात्तत्करोतिण्यन्तात् पचाद्यचि 'णेरनिटि' इति णिलोपे च सति पुण्यशब्दः पुण्यकरवाची । एवं भूतः पुरूरवाः । आहितवह्नीनामाहिताग्नीनाम् । सतां शिष्टानाम् । विहारे कालान्तरभाविनि परलोकविहारे स्थेयतां विवादपदनिर्णेतृताम् । ययौ । तिष्ठत्यत्र विवाद इति स्थेयः । 'स्थेयो विवादविषयनिर्णेतरि पुरोहिते' इति विश्वः । एवं विष्णुपुराणे पुरूरवसं प्रकृत्य श्रूयते—'निर्मन्थ्याग्नित्रयमाम्नायानुसारी जुहाव । ऊर्वशीसालोक्यञ्च फलमभिसंहितवान् । तेनैवाग्निना बहुविधान् यज्ञानिष्ट्वा गन्धर्वलोकानवाप्य ऊर्वश्या सहावियोगञ्चावाप । एकोऽग्निरादावभवत् । ऐलेन मन्वन्तरे त्रिधा प्रवर्तितः ।' इति । अतः पुरूरवाः कर्मणामभिसंहितफलाफलसंवादे सतां प्रमाणभूतोऽभूदित्यर्थः । विहारे अग्नीनामाहवनीयादिरूपेण विभज्य हरणरूपे प्रणयन इति वा योज्यम् । अग्निं विहृत्येत्यादौ विहारशब्दस्य प्रणयने प्रयोगात् । तथा चाग्नित्रित्वकल्पने प्रमाणभूतोऽभूदित्यर्थः । यदपत्येत्यत्र यत्पदस्य स चन्द्रमा जज्ञ इति पूर्वश्लोकेन संबन्धः । अस्थेये स्थेयत्वारोपाद्रूपकालङ्कारः ॥ ११ ॥

**समवर्धत तद्वंश उपर्युपरि पर्वभिः ।**
**यशोमुक्ताफलैर्यस्य दिशो दश विभूषिताः ॥ १२ ॥**

**समवर्द्धतेति**। तद्वंशः तस्य चन्द्रमसो वंशोऽन्वयः स एव वंशो वेणुः। उपर्युपरि उत्तरोत्तरम्। पर्वभिः पुरूरवसः आयुः, ततो नहुषः इत्यादिप्रकारेणोत्पन्ना राजान एव पर्वत्वेनाध्यवसीयन्ते तैः। समवर्द्धत सम्यग्वर्द्धते स्म। यस्य वंशस्य, यशांस्येव मुक्ताफलानि तैः। दश दिशः प्राच्यादयोऽष्टौ ऊर्द्ध्वमधश्चेति दश दिशः। विभूषिताः अलंकृताः। वंशकाण्डेभ्यो मुक्ताफलान्युत्पद्यन्त इति प्रसिद्धिः। स वंशः समवर्धतेति पूर्वेणान्वयः। उत्तरवाक्यगतो यच्छब्दः कुलकश्लोकेष्विव पूर्ववाक्ये तच्छब्दप्रयोगानपेक्ष एव पूर्ववाक्यान्वयीति तदप्रयोगः। तदुक्तं काव्यप्रकाशिकायाम् 'यच्छब्दस्तूत्तरवाक्यार्थगतत्वेनोपात्तः सामर्थ्यात् पूर्ववाक्यार्थगतस्य तच्छब्दस्योपादानं नापेक्षते' इति। अत्र भूषितत्वं मुक्ताफलैरेव संभवतीति रूपकसमासे सति तदुत्थापिते च वंशशब्दश्लेषे **श्लिष्टशब्दनिबन्धनपरंपरितरूपकालङ्कारः** ॥ १२ ॥

**बभूव नहुषस्तस्मिन्नैरावत इवाम्बुधौ।**
**यमिन्द्रविगमे देवाः पदे तस्य न्यवीविशन् ॥ १३ ॥**

**बभूवेति**। तस्मिन् वंशे। अम्बुधौ सागरे। ऐरावत इव नहुषः बभूव। यं नहुषम्। इन्द्रस्य शक्रस्य विगमे अपगमे सति। तस्य इन्द्रस्य। पदे स्थाने। देवाः अग्न्यादयः। न्यवीविशन् निवेशयन्ति स्म। विशतेर्णिजन्ताल्लुङ्। **उपमालङ्कारः**। त्वाष्ट्रवधरूपब्रह्महत्यादोषान्नष्टप्रभावे क्वापि निलीने शक्रे तदन्ये देवाः सम्भूय भुवि राज्यं प्रशासतं नहुषं क्रतुशतयाजिनं तत्पदोचितं विचिन्त्य तस्य पदेऽभ्यषेचयन्निति भारतकथात्रानुसन्धेया। इन्द्रविगम इति समासे गुणभूतस्यापीन्द्रस्य तस्येति सर्वनाम्ना परामर्शो युक्तः। तदाह वामनः 'सर्वनाम्नानुसन्धिर्वृत्तिच्छन्नस्य' इति ॥ १३ ॥

**अमितस्य महिम्नस्ते प्रयातुं पारमिच्छताम् ।**
**वितथा वेदपान्थानां यत्रसायंगृहा गतिः ॥ ४७ ॥**

निगमैरनिगम्यत्वमेव प्रपञ्चयति— **अमितस्येति** । अमितस्य अपरिच्छिन्नस्य । ते महिम्नः त्वैद्रूभवस्य । (परं)पारं तीरम् । प्रयातुं इच्छताम् । वेदा एव पान्थाः नित्यपथिकाः । 'पन्थो ण नित्यम्' इति णप्रत्ययः, पन्थादेशश्च । तेषां, यत्रसायंगृहा यत्र सायंसमयस्तदेव गृहं यस्यां सा । गतिः । वितथा व्यर्था । यथा पुरुषाः पुरुषायुषेणाप्यप्राप्यं देशं प्राप्तुं प्रस्थिताः प्रतिदिवसमासायं गच्छन्तोऽपि न तं देशं प्राप्नुवन्ति । तथा अवाङ्मनसगोचरं त्वन्महिमानं प्रतिपादयितुं प्रवृत्ताः वेदाः शब्दगोचरेण सर्वेण प्रकारेण प्रतिपादयन्तोऽपि न कार्त्स्न्येन प्रतिपादयितुं प्रभवन्तीत्यर्थः । **रूपकालङ्कारः** ॥ ४७ ॥

**नम्यस्य नमतः क्षुद्रान् वरदस्य वरार्थिनः ।**
**पुत्रैः पितृमतः क्रीडा कथं ते केन वर्ण्यते ॥ ४८ ॥**

**नम्यस्येति** । नम्यस्य सर्वलोकनमस्कर्तव्यस्य । क्षुद्रान् अल्पानिन्द्रादीनपि । उपेन्द्राद्यवतारैः नमतः । वरदस्य सर्वलोकवरप्रदायकस्य । तथापि ब्रह्मादिषु, वरार्थिनः । पुत्रैः काश्यपादिभिः । पितृमतः । ते तव । क्रीडा । कथं केन प्रकारेण प्रवृत्ता । केन वा पुरुषेण वर्ण्यते । अचिन्त्यस्तव क्रीडाप्रकारः । अत एव तव वर्णने न कोऽपि शक्त इत्यर्थः ॥ ४८ ॥

**नटवद्भूमिकाभेदैर्नाथ दीव्यन् पृथग्विधैः ।**
**पुंसामनन्यभावानां पुष्णासि रसमद्भुतम् ॥ ४९ ॥**

**नटवदिति** । हे नाथ । नटवत् नटेन तुल्यम् । 'तेन तुल्यं क्रियाचेद्वतिः'

इति वतिप्रत्ययः। पृथग्विधैः भूमिकाभेदैः मत्स्यकूर्माद्यवतारभेदैः। 'भूमिका रचनायां स्यान्मूर्त्यन्तरपरिग्रहे।' इति विश्वः। 'तत्तद्वेषो भूमिका स्यात्' इति वैजयन्ती। दीव्यन् क्रीडन्। त्वं, अनन्यभावानां अन्यो विषयत्वेन नास्ति यस्य सोऽनन्यः अनन्यो भावो येषां तेषामेकान्तिनाम्। अद्भुतं संसारे अननुभूतत्वेनाश्चर्यभूतम्। रसं अपवर्गानन्दम्। पुष्णासि अभिव्यञ्जयसि। त्वदवताररहस्यानुचिन्तनपरानपवर्गदानेन योजयसीत्यर्थः। नटो यथा रामाद्यनुकार्यवेषभेदैरनन्यहृदयानां सामाजिकानामद्भुताख्यं रसं पुष्णाति तद्वदिति भावः। **उपमालङ्कारः** ॥ ४९ ॥

**ब्रह्मादिस्तम्बपर्यन्तविचित्राङ्कुरशालिनाम्।**
**सलिलं कर्मकन्दानां क्रीडैव तव केवलम् ॥ ५० ॥**

**ब्रह्मादीति**। ब्रह्मा आदिः पूर्वः स्तम्बः तृणादिः पर्यन्त उत्तरावधिः येषां ते ब्रह्मादिस्तम्बपर्यन्ताः सर्वेऽपि प्राणिनः त एव विचित्राङ्कुराः तच्छालिनां तद्भाजाम्। कर्मकन्दानां कर्माण्येव कन्दाः सस्यमूलानि तेषाम्। केवलं तव क्रीडैव सलिलम्। त्वत्क्रीडामात्ररूपसलिलावसेकसहकृता एव कर्मकन्दा विचित्रप्रपञ्चरूपानङ्कुरान् जनयन्तीत्यर्थः। अत्र भगवत्क्रीडायां सलिलत्वारोपस्य प्रपञ्चाङ्कुरजननलक्षणप्रकृतकार्योपयोगित्वात् **परिणामालंकारः** ॥ ५० ॥

**निराधारनिजस्थेम्नो निरुपाधिकशेषिणः।**
**निरपेक्षनियन्तुस्ते निस्समाभ्यधिका गुणाः ॥ ५१ ॥**

**निराधारेति**। निराधार आधारनिरपेक्षः निज आत्मीयः स्थेमा स्थैर्यं यस्य तस्य। निरुपाधिकशेषिणः स्वभावादेव सकलजगत्प्रधानभूतस्य। निरपेक्षं सहकार्यन्तरनिरपेक्षं यथा तथा नियन्तुः जगन्नियामकस्य। ते।

गुणाः। निस्समाभ्यधिकाः समाभ्यधिकरहिताः। लोके हि स्थिराणां भूधरादीनां स्थैर्यमाधारसापेक्षम्, भृत्यादीन् प्रति राज्ञां शेषित्वं भृतिदानाद्युपाधिप्रयुक्तम्, तेषामेव राज्यादिनियन्तृत्वममात्यादिसापेक्षम्, भगवतस्त्वनीदृशाः स्थैर्यादय इति भूधरस्थैर्यादिभ्यस्तेषामुत्कर्षरूपो **व्यतिरेकालङ्कारो** व्यज्यते। स च व्यज्यमानो निस्समाभ्यधिकत्वस्य वाच्यस्य सिध्यङ्गमिति वाच्यसिद्ध्यङ्गनामा गुणीभूतव्यङ्ग्यभेदः। स्थिरशब्दात् 'वर्णदृढादिभ्यः ष्यञ् च' इति चकारादिमनिच्। 'प्रियस्थिर' इत्यादिसूत्रेण स्थिरशब्दस्य स्थादेशे 'प्रकृत्यैकाच्' इति प्रकृतिभावे च सति स्थेमेति रूपम्॥ ५१॥

## अनाविलधियामन्तश्चिन्तामणिरिव स्फुरन्।
## दिशस्यभिमतं सर्वमतिरस्कार्यदीधितिः॥ ५२॥

**अनाविलेति**। अतिरस्कार्यदीधितिः तेजोऽन्तरैरनभिभवनीयप्रकाशः। त्वम्, अनाविलधियां चिन्ताविरोधिव्यापारैरकलुषधियाम्। अन्तः हृदये। स्फुरन् प्रकाशमानः, निरन्तरचिन्ताविषयीकृतस्सन्। अभिमतं अभीप्सितम्। सर्वं दिशसि। तान् संसारान्मोचयित्वा 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इत्यादिमुक्तविषयश्रुत्युक्तप्रक्रियया संकल्पमात्रेण तदभिलषितं सर्वं प्रयच्छसीत्यर्थः। चिन्तामणिरिव। सोऽपि दिव्यरत्नतया तेजोऽन्तरैरनभिभवनीयप्रकाशः। चिन्तितोऽभिमतमर्थं ददाति॥ ५२॥

## संसारमरुकान्तारे परिश्रान्तस्य देहिनः।
## त्वद्भक्त्यमृतवाहिन्यामादिष्टमवगाहनम्॥ ५३॥

**संसारेति**। संसार एव मरुः निर्जलप्रदेशः सुखरहितत्वेन नीरसत्वात् तस्य कान्तारं दुर्गमं वर्त्म, इष्टापूर्तादिकारिणामिहामुत्र च गतागतसाधन-

